निज व्यापार चिन्ताकुलाः तन्नामा
पिच विस्मरन्ति कतिभिः सम्वत्सरैः
योषिताः १२

पदच्छेदः

शोचन्ते न मृत कदापि वनिताः यदि अस्ति
गेहे धन तद् चेत् न अस्ति रुदन्ति जीव
न धिया स्मृत्वा पुनः प्रत्यह कृत्वा तदहन
क्रिया निज निज व्यापार चिन्ताकुलाः तन्ना
म अपि च विस्मरन्ति कतिभिः सम्वत्सरैः
योषिताः १२

संस्कृत टीका

[न शोचन्ते] न शोकं कुर्वन्ति [मृतं] त्यक्त प्राणं [कदापि] कस्मिन् कालेपि [वनिताः] स्त्रियः [यदि] चेत् [अस्ति] वर्त्तते [गेहे] आगारे [धनं] वित्तं [तद्] पूर्वोक्तधनं [नास्ति] न भवति [रुदन्ति] शोकाक्लिष्टाः सन्त्यः अश्रुपातं विमोचयन्ति जीवनधिया प्राणानां रक्षण बुद्ध्या स्वभाभूत् यदस्माकं प्राणाः नश्येयुः स्मृत्वा विचिन्त्य पुनः अभीक्ष्णं प्रत्यहं प्रतिदिनं नित्यं कृत्वा विधाय तदहनक्रियां तस्य मृतकशरीरस्याग्नि संस्कार विधानं

निज निज व्यापार चिन्ता कुलाः स्वस्व कार्येषु
दत्त चित्ताः तन्नामापि तत्र कस्य नामधेयम
पि विस्मरन्ति नहीदं ... वनिताः कियद्
भिः संवत्सरैः वर्षैः योषिताः नार्यः १२

अन्वयः

यदि गेहे धनमस्ति नहि वनिताः मृतं कदापि न शोचन्ते चेद्धनं नास्ति पुनः स्वम्हं जीवन धिया तं मृतं स्मृत्वा रुदन्ति तद्दहन क्रियां कृत्वा संबन्धिलोकजनाः निज निज व्यापार चिन्ता कुलाभवन्ति योषिताश्च कतिभिः वत्सरैः तन्नामापि वि

स्मरन्ति १२

भाषा टीका

जो घर मैं धन है तौ स्त्री भी मरे पतिका शोक नहीं करती हैं और जो धन नहीं है तौ अपनेको देने की इच्छा धारण कर प्रति दिन मरे पतिको स्मरण करके रोती हैं उसकी दग्ध क्रिया होने पर सम्बंधी जन अपने अपने कार्य्यों में चिन्तातुर होजाते हैं कुछ वर्ष व्यतीत होने पर अवलागन उसका नाम भी भूल जाती हैं १२

भाषाछन्द

जो घर मैं धन हो न कदापि करै तिय सोच म-
रे वलभा की । जो नहि हो धन तौ नित शेव्रत -
धार हिये अभिलाष जिवा की । दग्ध किये प
र सर्व कुटुंबिन स्वार्थ लगैं ममता तज ताकी ।
केतिक वर्ष गए अवलाजन भूलहि नाम नलैं
सुधि वाकी १२

मूलम्

अष्टाविंशतिभेदमात्मनि पुरासंरो
प्यसाधोव्रतं साक्षीकृत्य जिनान्
गुरूनपि कियत्कालंत्वया पालितं
भक्तुं वाञ्छसि शीतवात विहतो भूत्वा
धुना तद्व्रतं दारिद्रोपहतः स्ववान्त
मशनं भुङ्क्ते सुधार्तोपि किम् १३।

पदच्छेदः

अष्टा विंशति भेदं आत्मनि पुरा संरोप्य साधो
व्रतं साक्षीकृत्य जिनान् गुरून् अपि किय-
त् काल त्वया पालित भक्तुं वाञ्छसि शी-
त वात विहितः भूत्वा अधुना तद् व्रत दारि-

द्रौपदत्तैः स्ववान्ते अशनैः भुङ्क्ते सुधानैः अपि किम् ॥ १३॥

संस्कृत टीका

(अष्टाविंशतिभेदं) अष्टभिरधिका विंशतिर्भेदाः प्रकाराः यस्य तद् प्रकारा नाह अहिंसा १ सत्यं २ अचौर्य्यं ३ ब्रह्मचर्य्यं ४ अपरिग्रहः ५ एवं पञ्च महाव्रतानि। ईर्य्या १ भाषा २ एषणा ३ आदाननिक्षेपणं ४ प्रतिष्ठापनं ५ एवं पञ्च समितयः स्पर्शनं १ रसनं २ घ्राणं ३ चक्षुः ४ श्रोत्रं ५ पञ्चेंद्रियाणि तेषां स्वस्व विषयेभ्यो बलात्कारेण व्यावर्त्तनमिति पञ्चेन्द्रिय विजयः षडावश्यका स्ते पूर्वमेव षष्टम काव्यस्य टीकायां कथिताः भूमीशयनं १ स्नानत्यजनं २ दन्तधावन त्यागः ३ वस्त्रत्यजनं ४ केशलोचनं ५ उद्दण्डमहारः ६ अल्पभोजनं तदपि दिने एकवार मेव ७ (आत्मनि) स्वस्मिन् (पुरा) पूर्वस्मिन् काले (संराप्य धृत्वा साधो) मुनि (व्रत) पूर्वोक्त मष्टाविंशतिभेदं नियमं (साक्षीकृत्य साक्षान् दर्शनं कृत्वा (जिनान्) केवलिनः (गुरून्) जैन यतीन् (अपि) निर्धारणे (कियत्काले

कानि चिह्नानि (त्वया) भवता (पालितं) पोषितं (भक्तुं) त्रोटयितुं (वाञ्छसि) का मयसि (शीत वात विहतः) शीत वायुभ्यां पीडितः (भूत्वा) सित्वा (अधुना) इदानीं (तद् व्रतं) पूर्वं कथितं व्रतं (दारिद्रोपहतः) धनराहित्येनापद्ग्रस्तः (स्ववान्तं आत्मनो वमनं (अशानं) भोजनं (भुङ्क्ते) खादति क्षुधार्तः बुभुक्षया पीड़ितः किम् निषेधे न भुङ्क्ते इतिभावः ॥ २३ ॥

अन्वयः

हे साधो पुरा त्वया जिनान् गुरून् अपि साक्षीकृत्य अष्टाविंशतिभेदात्मकं व्रतं आत्मनि संरोप्य कियत्कालं पालितं अधुना शीत वात विहतो भूत्वा तद् व्रतं भङ्क्तुं वाञ्छसि दारिद्रोपहतः क्षुधार्तोऽपि किं स्ववान्तमशनं भुङ्क्ते नभुंक्ते इति भावः २३

भाषा टीका

हे साधु तूने पहिले केवलि भगवान और जैन गुरों की साक्षि लेकर अठाइस मूल गुण युक्त जिनके नाम अहिंसा १ सत्य २ अचौर्य्य ३ ब्रह्मचर्य्य ४ अपरिग्रह ५ ये पाँच महाव्रत। ईर्य्या १ भाषा २ एषणा ३ आदान निक्षेप

ण ४ प्रतिष्ठापन ५ ये पाँच समिति स्पर्शन १ रसन २ घ्राण ३ चक्षु ४ श्रोत्र ५ इन पांचों इन्द्रियों का अपने अपने विषयमें बलात्कार कर रोकना ये पाँच इन्द्रिय विजय छह आव श्यक तिनका स्वरूप इसग्रंथकी छठी काव्य के टीकामें कियाहै भूमिशयन १ स्नानत्यज न २ दन्तधावनत्याग ३ वस्त्रत्यजन ४ केश लोच ५ उद्दण्ड आहार ६ अल्पभोजन सोभी एक दिनमें एकवार इनको आप धारण किया और कुछ काल लों उसको पाला अब शीत और वायुकी वेदनासे विह्वल हुवा उसको तोड़ना चाहताहै क्या दीन दरिद्री पुरुष भी भूखसे पीड़ित हुवा अपनी वमनको आ परवाताहै भावार्थ नहीं खाताहै ॥ १३ ॥

## भाषाछन्द

आठरु विंशति मूल गुणा तम नें मुनि पूर्व मंम व्रत लीना । देव गुरु जन साख हिय धर कें तिक कालजु पालन कीना । शीतरु वायुन ने दुखसें उर खंडनमें तिसके चित दीना । दीन क्षुधातुर ने भिकहीं निज छर्द नना किम भोजन कीना ॥ १३ ॥

## मूलम्

अन्येषां मरणं भवान गणयन्स्व स्यामरत्वंसदा देहिन् चिन्तय-सीन्द्रिय द्विपवशी भूत्वा परि भ्रा म्यसि अद्यश्वः पुनरागमिष्याति यमो नज्ञायते तत्वत स्तस्मादात्म हितं कुरुत्वस चिराद्धर्म्मं जिनेन्द्रोदितम् ॥ ॥ २४ ॥ ॥

पदच्छेदः

अन्येषां मरणं भवान् अगणयन् स्वस्य अमरत्वं सदा देहिन् चिन्तयसि इन्द्रिय द्विपवशी भूत्वा परि भ्राम्यसि अद्य श्वः पुनर् आगमिष्यति यमः न ज्ञायते तत्वतः तस्मात् आत्महितं कुरु त्वं अचिरात् धर्मं जिनेन्द्रोदितं ॥ ॥ २४ ॥ ॥ संस्कृतटीका

[अन्येषां] इतरेषां [मरणं] प्राणवियोगं [भवान्] त्वं [अगणयन्] अविचारयन् [स्वस्य] आत्मनः [अमरत्वं] मरणराहित्यं जीवनत्वमिति [सदा] शश्वत् [देहिन्] आत्मन् [चिन्तयसि] विचारयसि [इन्द्रिय द्विपवशीभूत्वा] स्पर्शन रसन घ्राण चक्षुः श्रोत्राणि पञ्चेन्द्रियाणि तान्येव गजः तस्य पादाक्रान्तः सित्वा [पार

भ्राम्यसि शश्वत् भ्रमणं करोपि पर्य्यटसि संसारे इति शेषः अद्य वर्तमाने दिने श्वः आगामिनि दिने पुनः वा पक्षान्तरे आगमिष्यति आयास्यति कालः मृत्युः नज्ञायते नावगम्यते त्वया इति शेषः तत्वतः निश्चयेन तस्मात् ततः कारणात् आत्महितं स्वेष्ट साधनं कल्याणं कुरु विदधातु अचिरात् शीघ्रं धर्मं त्वं जिनेन्द्रोदितं केवलिना प्रणीतं ॥ ॥१४॥ ॥

## अन्वयः

हे देहिन् भवान् अन्येषां मरणं मगणयन् स्वस्य सदा अमरत्वं चिन्तयसि इन्द्रिय द्विपवशी भूत्वा परिभ्राम्यसि तत्वतः यमोऽद्य पुनः श्वः आगमिष्यति इतिन ज्ञायते तस्मात् आत्महितं जिनेन्द्रोदितं धर्मंत्वं अविरात् कुरु ॥१४॥

## भाषा टीका

हे आत्मा तू औरों के मरने को नहीं गिणता हुवा सदा अपने तईं अमर चिन्ते है इन्द्रिय रूप हाथी का दवाया हुवा भ्रमता फिरै है ठीक यहै नहीं जानता कि काल आज या कल्ह अवश्य आवेगा इसलिये अपना हितकारी सर्वज्ञ की कही का कहा धर्म तू शीघ्र धारण कर १४

भाषाछन्द

औरन का मरना अविचारत तू अपना अमरत्व विचारै । इन्द्रियरूप महा गजका वशि भूत भया भव भ्रान्ति निहारै । आजहि आवत वा कलके दिन कालन तू यह रञ्च चितारै । तौ यह धर्म्म जिनेश्वर भाषित भो भव सन्तति बेग निवारै ॥ २४ ॥

॥ मूलं ॥

सौख्यं वाञ्छसि किं त्वया गतभवे दानं तपो वा कृतं । नो चेत्त्वं किमिहैव मेवलभसे लब्धं तदत्रागतं । धान्यं किं लभते विनापि वपनं लोके कुटुम्बी जनो । देहे कीटकभक्षितेन सदृशे मोहं वृथा मा कृथाः ॥ २५ ॥

पदच्छेदः

सौख्यं वाञ्छसि किम् त्वया गतभवे दानं

नपः वा कृतं नोचेत् त्वं किम् इदं एवं एव
लभसे लब्धं नेदं अत्र आगतं धान्यं किम
लभते विना अपि वपनं लोके कुटुंबी ज
नः देहे कीटक भक्षित इक्षु सदृशं मोहं त्व
या मा कृथाः ॥ १५ ॥

## संस्कृतटीका

[ सौख्यं ] आनन्दतां [ वाञ्छसि ] आकांक्षसि
[ किम् ] प्रश्ने [ त्वया ] भवता [ गतभवे ] पूर्वस्मि
न् जन्मनि [ दानं ] त्यागः न चैापध्याहारा भ
य शास्त्र भेदै श्चतुर्धा अथवा राग द्वेषयोः
परिहारः [ तपः ] तपनं तच्च अनशना वमौ
दर्य्य व्रत परि संख्यान रस परि त्याग वि
वक्त शय्यासन कायक्लेश भेदैः षड्धा व
हिरङ्गं प्रायश्चित्त विनय वैया वृत्य स्वाध्या
य व्युत्सर्ग ध्यान भेदै रन्तरङ्ग श्च षड्धा
एवं द्वा दश भेदं [ वा ] पक्षान्तरं [ कृतं ] विहितं
[ नोचेत् ] अन्यथा [ त्वं ] भवान् [ किम ] निषेधे
[ एवं ] इत्थं [ एव ] निश्चयेन [ लभसे ] गृह्णा
सि [ लब्धं ] प्राप्तं [ अत्र ] अस्मिन् लोके [ आ
गतं ] आयातं [ धान्यं ] शालिः [ किम ] निषेधे
[ लभते ] गृह्णाति [ विना ] वर्जने [ अपि ] निधा
रणे [ वपनं ] अन्नोत्पत्त्यर्थे [ भूमौ ] शालियव

दीनां क्षेपणं [लोके] संसारे [कुटुम्बी] कृषाणः [जनः] पुरुषः [देहे] शरीरे [कीटकभक्षिते क्षु सदृशे] कृमिखादिते [इक्षु दण्ड तुल्ये [मोहं] रागं [माकृथाः] माकुरुस्व ॥१५॥

## अन्वयः

हे प्राणिन् त्वं सौख्यं वाञ्छसि किन्त्वयागत भवे दानं वा तपः कृतं नोचेत् इहि त्वं सेवं किम् लभसे यद्लब्धं तदत्रागतं लोके कुटु- म्बीजनः किं बपनं विनापि धान्यं लभते कीटक भक्षिते क्षुसदृशे देहे वृथा मोहं मा कृथाः ॥१५॥

## भाषा टीका

हे जीव तू जो सुख की बान्छा करता है क्या तूने पूर्व जन्म में दान दिया था वा तप किया था जो नहीं किया तो इस लोक में यह सुख- तुझको कैसें मिले जैसा पूर्व किया था वैसा यहां प्राप्त भया संसार में किसाण लोग बिना बोए भी कहीं धान्य उठाले हैं कीड़े के खाए ईख समान इस शरीर में तू वृथा मोह म- त कर ॥॥१५॥॥

## भाषाछन्द

चाहत है सुख क्या पिछले भवदान

दिया अरु संयम लीना । नानक या मन
तें सुख पावत कौन भई सो पुराकृत बी-
ना । कौटक मंदिर देख समान शरीर नि-
पै तज मोह प्रवीना ॥ १५ ॥

मूलम्

आयुष्यं तव निद्रयार्द्धमपरं चा-
युस्त्रिभेदा दहो बालत्वं जरया
कियद् व्यसनता यातीति देहिन
वृथा निश्चित्यात्मनि मोह पाश
मधुना संछिद्य बोधासिना मुक्ति
श्रीवनितावशीकरण सच्चारित्र
माराधय ॥१६॥

पदच्छेदः

आयुष्यं तव निद्रया अर्द्धं अपरं च आयुः त्रि
भेदात् अहो बालत्वं जरया कियत् व्यसनतः
याति इति देहिन वृथा निश्चित्य आत्मनि
मोहपाशं अधुना संछिद्य बोधासिना मुक्तिश्री
वनिता वशीकरण सच्चारित्रं आराधय ॥ १६ ॥

संस्कृत टीका

[आयुष्यं] जीवनं [तव] ते [निद्रया] स्वप्नेन [अ
र्द्धं] एकस्य द्वौ भागौ कृत्वा तयोरेको भागः [अ
परं] द्वितीयो भागः [च] इतरे तर योगे [आ
युः] प्राण धारणं जीवनं [त्रिभेदात्] त्रिभिर्भा-
गैः [अहो] शोके विस्मयेवा [बालत्वे] शैश
वे अज्ञानदशायां [जरया] वार्धके क्षीण शरी
रे [कियत्] किञ्चित् [व्यसनतः] विषय सेव
नात् तारुण्ये इतिभावः [याति] गच्छति [इति] ए
वं [देहिन्] आत्मन् [वृथा] निरर्थकं [निश्चित्य
निश्चयंकृत्वा दृढीकृत्वा [आत्मनि] स्वस्मि
न् [मोहपाशं] रागरज्जुं [अधुना] इदानीं [सं
छिद्य] भित्वा [बोधासिना] ज्ञानखड्गेण [मु-
क्ति श्री वनिता वशीकरण सच्चारित्रं] मोक्ष ल
क्ष्मी रूपां स्त्रियं वशीकारकं श्रेष्ठाचरणं [आरा
धय] गृहाण, धारय ॥ १६ ॥

## अन्वयः

हे देहिन् अहो तव अर्धमायुष्यं निद्रया अ
परं चार्द्धं आयुष्यं बालत्वेजरया कियत् व्यस
नतः त्रिभेदात् वृथा याति अधुना आत्मनि

एवं निश्चित्य चार्यामिना मोहपाशं सोक्-
य मुक्ति श्रीवनिता वशीकरण सच्चारित्रं मा-
राधय ॥ १६ ॥

भाषाटीका

हे आत्मा शोक वा विस्मय का स्थान है तेरी
आयु का आधा भाग तो नींद में जाता है और दू-
सरा आधा भाग वालपन बुढ़ापा और तरुणाई
में तीन भाग होकर वृथा जाता है अब तूने आप
में निश्चय करके ज्ञानरूप खड्ग से मोह रूप फां-
सी को काटकर मोक्ष लक्ष्मी रूप स्त्री के वशीक-
रण हारे श्रेष्ठ चारित्र को धारण कर ॥ १६ ॥

भाषाछन्द

आयुष अर्द्ध अरे मति मन्द व्यतीत भई
तव नींद मंझारी । अर्द्ध विभाग बुढ़ाप
न शैशव यौवन के वश व्यर्थ विसारी ।
आतम में दृढ़ धार सुधी गह ज्ञान असि
मुह पाश विदारी । मुक्ति रमा रमणी व
श कारण हो नित सम्यक चारित्र-
धारी ॥ १६ ॥

## मूलम्

यत्कालेलघुपात्रमण्डितकरो भूत्वापरेषांगृहे। भिक्षार्थंभ्रमसेतदाहिभवतोमानापमानेनकिम्। भिक्षोतापसवृत्तितःकदशनात् किंतप्यसेऽहर्निशम्। श्रेयार्थंकिलसह्यतेमुनिवरैर्वाधासुधाद्युद्भवा: ॥ १७ ॥

## पदच्छेदः

यत्काले लघुपात्र मण्डित करः भूत्वा परेषां गृहे, भिक्षार्थं भ्रमसे तदा हि भवतः मानापमानेन किम् भिक्षो तापस वृत्तितः कदशनात् किम् तप्यसे अहर्निश श्रेयार्थे किल सह्यते मुनिवरैः वाधा सुधाद्युद्भवा ॥ १७ ॥

## संस्कृतटीका

[यत्काले] यस्मिन समये [लघु पात्र मण्डितकरः] लघु पात्रेण मण्डितः करोयस्य क्षुद्र भाजन युक्त पाणिः [भूत्वा] सित्वा [परेषां] अन्येषां [गृहे] निवासे [भिक्षार्थं] भोजनाय [भ्रमसे]

गच्छामि भ्रमणं करोमि (तदा) तस्मिन काले (हि) योगेय (भवनः) तव (मानापमानेन) सत्कार तिरस्काराभ्यां (किम्) किमपि न (भिक्षो) भिक्षाय जीविन् (तापस वृत्तितः) तपस्वीनामाचरणात् (कदशनात्) कुत्सित भोजनात् (किम्) कथं (तप्यसे) खेदं प्राप्नोषि (अहर्निशं) दिवारात्रं (श्रेयार्थे) कल्याणाय (किल) निश्चयेन (मन्ये) तेभ्यस्येते (मुनिवरैः) मुनिषु वराः श्रेष्ठाः तैः (य तिश्रेष्ठैः) (बाधा) पीड़ा (क्षुधाद्युद्भवा) क्षुधाभा गनेच्छा आदिशब्देन पिपासा दयोपि ग्राह्याः क्षुधा आदिर्येषांते क्षुधादयः तेभ्यः उद्भवती ति क्षुधा द्युद्भवा ॥१७॥

## अन्वयः

हे भिक्षो यत्काले लघुपात्र मण्डित करो भू त्वा त्वमितिशेषः परेषां गृहे भिक्षार्थे भ्रमसि त दा हि भवतो मानापमानेन किम् अहर्निशं ताप सवृत्तितः कदशनात किं तप्यसे मुनिवरैः कि ल श्रेयार्थे क्षुधाद्युद्भवा बाधा सह्यते ॥१७॥

## भाषाटीका

हे भिक्षुक जिसकालमैं तू हाथमैं छोटा पात्र लेकर भिक्षाके अर्थ औरोंके घरमें फिरता है तिसकालमें तुझको मान और अपमान से क्या दिनरात तापस वृत्ति और अरोचक भोजन से क्यों दुखी होता है अपने कल्याण के अर्थ महा मुनि क्षुधा पिपासादि जनित बाधा को सहते हैं ॥१७॥

## भाषा छन्द

जाक्षण मैं लघु पात्र लिये परगेहमें भीखजु मांगन जावे। ताक्षणमें अपमान रु मान कहा तव मान न भीख मंगावे। भो मुनि तापस हो दिन रैन न अप्रिय भोजन से दुख पावे। मुक्त्यभिलाषि महामुनि कष्ट सहैंहि जु भूख रु प्यास दिखावे ॥ १७॥

## मूलम्

एकाकी विहरत्यनस्थितबलीवर्दो यथास्वेच्छया। योषामध्यरतस्तथा त्वमपि भोस्त्यक्त्वा... यूथं यते। तस्मि... दभिलाषतानभ

यतः किम्भ्राम्यसि प्रत्युत । मध्ये साधुजनस्य तिष्ठसि न किं कृत्वा सदाचारताम् ॥२८॥

## पदच्छेदः

एकाकी विहरति अनस्थिरवलीवर्दः यथा स्वेच्छया योषामध्यगतः तथा त्वं अपि भो त्यक्त्वा आत्मयूथं यते तस्मिन् चेत् अभिलाषता न भवतः किम् भ्राम्यसि प्रत्युत मध्ये साधुजनस्य तिष्ठसि न किम् कृत्वा सदाचारतां ॥२८॥

## संस्कृतटीका

(एकाकी) असहायः अद्वितीयः (विहरति) विचरति (अनस्थिरवलीवर्दः) चञ्चलस्थिति रहित चलिष्ठ वृषभः (बिजार) इतिभाषायां (यथा) येनप्रकारेण (स्वेच्छया) आत्मनः कामनया (योषामध्यगतः) नारीजनेषु दत्तमनाः (तथा) तेनप्रकारेण (त्वमपि) भवानपि (भोः) उत्तमसंबोधने (त्यक्त्वा) परित्यज्य (आत्मयूथं) स्वगणं (यते) मुने (तस्मिन्) नारीमध्ये (चेत्) य

दि [अभिलाषा] आकांक्षा [न] निषेधे [भवतः] तव [किम्] कथं [भ्रास्यसि] भ्रमणं [करोषि] प्रत्यहं] प्रतिदिनं [मध्ये] अन्तर [साधुजनस्य] मुनि लोकस्य [तिष्ठसि] उपविशसि [क्षत्वा] धृत्वा [सदाचारतां] सम्यक् चारित्र ॥ १८ ॥

## अन्वयः

भोयते यथा अनस्थित वलीवर्दः योषा मध्य रतः आत्म यूथं त्यक्त्वा एकाकी स्वेच्छया विहरति तथा त्वमपि विहरसि इतिशेषः यदि भवतो भिलाषा तस्मिन्न तर्हि इति इतिशेषः प्रत्यहं साधुजनस्य मध्ये किं न तिष्ठसि ॥ १८ ॥

## भाषाटीका

भोयति जैसें चञ्चल बिजार स्वजातीय स्त्रियों मैं रत हुआ अपने यूथ को छोड़कर इच्छापूर्वक एकला फिरता है तैसें ही तू भी विचरै है जो स्त्रियों मैं तेरी अभिलाषा नहीं है तो प्रतिदिन क्यौं भ्रमता फिरै है सम्यक् चारित्र को धारण कर साधुजनौं के मध्य क्यों नहीं रहता ॥ १८ ॥

## भाषाछन्द

साँड समान अनास्थित हो विचरै तु असं-
गस्वछन्द अकेला । छाड दियो निजसंग-
तिको अबलाजन सोकर आपन मेला । जानि
नसैं अभिलाप नहीं तबतों दिनरैन भ्रमै कि-
मरैला । क्योंन रहै मुनिसंगति में धर उत्तम-
चारित पन्थसुहेला ॥१८॥

## मूलम्

क्रीतान्नं भवता भवेत्कदशनं गे
हस्तदा श्लाघ्यते । भिक्षायां यद
वाप्यते यतिजनैस्तद्भुज्यते त्वाद
रात् । भिक्षो भाटकसद्मसन्निभ
तनोः पुष्टिं वृथा माकृथाः । पूर्णे किं
दिवसावधौ क्षणमपि स्थास्यतु यमो
दास्यति ॥ १९ ॥

## पदच्छेदः

क्रीतान्नं भवता भवेत् कदशनं गेहः तदा श्ला
घ्यते भिक्षायां यद् अवाप्यते यतिजनैः तद्
भुज्यते अति आदरात् भिक्षो भाटक सद्म स-
न्निभतनोः पुष्टिं वृथा माकृथाः पूर्णे किम् दिव
सावधौ क्षणम् अपि स्थास्यतु यमः दास्यति ॥१९॥

## संस्कृत टीका

[क्रीतान्नं] द्रव्येण गृहीतं भोजनं [भवता] त्वया [भवेत्] स्यात् [कदशनं] अप्रियभोजनं [रोषः] क्रोधः [तदा] तस्मिन्काले [श्लाघ्यते] शोभते प्रतिष्ठायाति [भिक्षायां] अर्दनाया [यद्] श्रावकजनैर्दत्तभोजनं [अवाप्यते] प्राप्यते [यतिजनैः] मुनिलोकैः [तद्] पूर्वोक्तं लब्ध भोजनं [भुज्यते] भक्ष्यते [अत्यादरात्] बहुसत्कारात् [भिक्षो] यते [भाटकसद्मसन्निभतनोः] तत्स्वामिनं किञ्चिद्धनं दत्वा निवासार्थं गृहीत गृहेण तुल्यस्य शरीरस्य [पुष्टिं] पोषणं [माकृथाः] माकुरु [पूर्णे] पूर्णतायाते [किम्] निषेधे [दिवसावधौ] दिनानामन्ते आयुषन्ते [क्षण] समयं क्षणस्तु निमेष क्रियायाश्चतुर्थोभागः कालः [स्थातुं] स्थिरीभवितुं [यमः] मृत्युः [दास्यति] दासिष्यति ॥ १९ ॥

## अन्वयः

भो भिक्षो यदि इतिशेषः कदशनं भवता क्रीतान्नं भवेत् तदा त्वया रोषः श्लाघ्यते भिक्षायां यद् वाप्यते यतिजनैः तदत्यादरात् भुज्यते भा

टक सद्म सन्निभतनोः वृथा पुष्टि मालब्धाः
दिवसावधा पूर्णं किम् यमः स्यातुदम्यनि ।१८

भाषाटीका

हे भिक्षुक यदि अस्वादु भोजन लगभग दे कर
लिया हुवा हो तो तुझको क्रोध भी करना है भिक्षामें जो
मिल जाता है साधुजन उसको अति आदर से खा
ते हैं भाड़े के घर समान शरीर को वृथा पुष्ट मन
कर जब आयु के दिनों की अवधि पूर्ण हो जावेगी
तब क्या काल ठहरने देगा ॥१८॥

भाषा छन्द

जो असुहावन भोजन कौन किया तब
होय तु रोष भिखो है । साधु तु आदर से
वहि भुंजत जो कुछ आय पिरापत होवे ॥
भिक्षुक भाटक गेह समानन देह कु पुष्ट
वृथा कर खोवे । पूरण आयु भए क्षणग
क भिना यमराज ठरावन को है ॥१८॥

मूल्यम्

लब्ध्वार्थं यदि धर्मदान विषये
दातुं नये: शक्यते । दारिद्र्यापह
तास्तथापि विषया सांतिन मुञ्च

न्तियें धृत्वा ये चरणं जिनेन्द्र
गदितं तस्मिन्सदानादरा । स्तेषां
जन्म निरर्थकं गतमजा कण्ठेस्त
नाकारवत् ॥ २० ॥

पदच्छेदः

लब्ध्वा अर्थं यदि धर्मदान विषये दातुं न
यै: शक्यते दारिद्रोपहताः तथापि विषयाश
क्तिं न मुञ्चन्ति ये धृत्वा ये चरणं जिनेन्द्र
गदितं तस्मिन् सदा नादराः तेषां जन्म निर
र्थकं गतं अजाकण्ठे स्तनाकारवत् ॥ २० ॥

संस्कृत टीका

[लब्ध्वा] प्राप्य [अर्थं] वित्तं [यदि] चेत् [ध
र्म्मदान विषये] चपत्यागमध्ये, उत्तमक्षमा
मार्दवार्जवसत्य शौच संयम तपस्त्यागा कि
ञ्चन ब्रह्म चर्य्याणि एवं दशधा धर्म्मः दान
ञ्च औषधाहारा भय विद्या भेदाच्चतुर्धा [दा
तुं] दासितुं [न] निषेधे [यैः] पुरुषैः [शक्य
ते] समर्थ्यते [दारिद्रोपहताः] द्रव्या भावेन
संक्लिष्टाः [तथापि] तदपि [विषयासक्तिं] वि
षयलीनतां, रागपरणतिं [न] निषेधे [मुञ्च

न्ति। त्यजन्ति। ये। ये पुरुषाः। धृत्वा। अङ्गीकृत्य। चरणं। चारित्रं। जिनेन्द्र गदितं यो सर्वज्ञ के वर्णिता प्रणीतं। तस्मिन। पूर्वोक्त चारित्रे। सदा। सर्वस्मिन् काले। नादराः। सत्कार रहिताः। तेषां। पूर्वोक्त पुरुषाणां। जन्म। शरीर धारणं। निरर्थकं। निष्प्रयोजनं। गतं। यातं। अजा कण्ठे। छागी गले। स्तनाकार वत्। चूचका कृति तुल्यं ॥ २० ॥

## अन्वयः

यदि अर्थं लब्ध्वापि धर्म्मदान विषये दातुं न शक्यन्ते येदारिद्रोपहताः तथापि विषया शक्तिं न मुञ्चन्ति ये जिनेन्द्र गदितं चरणं धृत्वा तस्मिन् सदा नादराः वर्त्तन्ते ज्ञानि शेषः तेषां जन्म अजा कण्ठे स्तनाकार वत् निरर्थकं गतं ॥ २० ॥

## भाषाटीका

जो नर धन को पाकर धर्म्म दान में नहीं लगाते हैं और निर्धन हैं तो भी विषय वासनाको नहीं छोडते हैं और जो भगवत प्रणीत चारित्र को धारण कर सदा उसमें सत्कार रहित

वतैं हैं जिनका जन्म बकरी के गले में चूचीके आकार वत् वृथा जाता है ॥ २० ॥

भाषाछन्द

जो धन पाय न दान करै अरु धर्म विषै नहि ताह लगावें। होय दरिद्र तथापि विषातुर छांडत नांहि विषै दुख पावें। धार हिये जिन भाषित चारित भाव अनादरता बिच लावें। जन्म निरर्थ अजा गल चूचक के समते भुवि भार कहावें। ॥२०॥

मूलम्

लब्ध्वा मानुषजातिमुत्तमकुलमरूपंचनीरोगतां। बुद्धिंधीधनसेवनसुचरणश्रीमज्जिनेन्द्रोदितम्। लेभार्यवसुपूर्णहेतुभिरलंस्तोकायसौरव्यायमो। देहिन्देह सुपोलकं गुणभृतं भक्तुं किमिच्छास्तिते ॥२१॥

पदच्छेदः

लब्ध्वा मानुषजातिं उत्तमकुलं रूपं च नीरो-

गतो बुद्धि धीधन सेवनं सुचरणं श्रीमज्जिनेन्द्रोदितं लोभार्थं वसुपूर्णहेतुभिः अलं स्तोकाय सौख्याय भोः देहिन् देहसुपोतकं गुणभृतं भंक्तुं किम् इच्छा असि ते ॥ २१ ॥

संस्कृतटीका

[लब्ध्वा] प्राप्य [मानुषजातिं] नरत्वं [उत्तमकुलं] उत्कृष्ट सजातीयगणं [रूपं] सौन्दर्यं [च] पुनः [नीरोगतां] रोगराहित्यं, कुशलतां, स्वास्थ्यं [बुद्धिं] ज्ञानं [धीधनसेवनं धीः बुद्धिरेवधनं येषांतैः सेवनं प्राज्ञपुरुषैः कृतशुश्रूषां [सुचरणं] सम्यक्चारित्रं [श्रीमज्जिनेन्द्रोदितं] समवसरणादिबाह्यविभूतिभिरनन्तज्ञानदर्शनसुखवीर्य्यरूपअन्तरङ्ग श्रियो नाथेन भगवता केवलिना प्रणीतं [लोभार्थं] इच्छायै लोभस्तु चतुर्षु कषायेष्वन्तरंगतो चतुर्थकषायः [वसुपूर्णहेतुभिः] द्रव्यस्य पूर्णतायाः कारणैः [अलं] पूर्णं [स्तोकाय] अल्पाय [सौख्याय] आनन्दाय [देहिन्] आत्मन् [देहसुपोतकं] शरीररूपसुष्ठुजलयानं [गुणभृतं] गुणान् बिभर्तीति गुणभृत् तंवा गुणैः भृतं गुणभृतं [भंक्तुं] छेत्तुं [किम्] कथं [इच्छा] वाञ्छा [अ

स्ति] वर्त्तते [ते] तव ॥ २१ ॥

### अन्वयः

भो देहिन् मानुषजाति मुत्तम कुलं रूपं नीरोग तां बुद्धिं धीधन सेवनं श्रीमज्जिनेन्द्रोदितं सुचरणं चलब्ध्वावसु पूर्ण हेतु भिर्लोभार्थ स्तोकाय सौख्याय गुणभृतं देह सुपोतकं भक्तुं ते इच्छा अलंकिमस्ति ॥ २१ ॥

### भाषाटीका

हे आत्मा मानुषजाति उत्तम कुल रूप नीरोगतां बुद्धि पण्डितजन कृत सेवा समव सरणादिक वाह्य विभूति और अनन्त ज्ञान दर्शन सुख वीर्य्य रूप अन्तरंग लक्ष्मी के नायक श्रीसर्वज्ञ केवली प्रणीत सम्यक् चारित्र को पाकर लोभ के अर्थ धनकी पूर्णता के कारण थोड़े सुख के लिये गुणों के भरे हुए शरीर रूप श्रेष्ठ प्रोहण के तोड़ने को तेरी इच्छा क्यों भर पूरी होरही है ॥ २१ ॥

### भाषाछन्द

पाकर मानुष भौ कुल उज्वल सुन्दर रूप नरामय काया । बुद्धि सुधीजन सेवित पाद भयो जिन भाषित चारित पाया

लोभवशी धन सञ्चय कारण भी मुख किञ्चित देत भमाया। आनम् द्रुत सुपीत गुणाकरनादि बिदारणकी चित लाया ॥२१॥

## मूलम्

वेतालाकृतिमुद्धदग्धमृतकं दृ
ष्ट्वा भवन्तियते। यासांनास्तिभ-
यंत्वयासममहोजल्पन्तितास्त-
त्पुनः। राक्षस्योभुवनेभवन्तिव-
निताभामागताभक्षितुं मत्वैवं
प्रपलाप्यतांमृतिभयात्वंनत्रमा
स्याः क्षणम् ॥२२॥

## पदच्छेदः

वेतालाकृतिं उद्धदग्ध मृतकं दृष्ट्वा भवन्ति ये ते यासां न अस्ति भयं त्वया समं अहो जल्पन्ति ताः तद् पुनः राक्षस्यः भुवने भवन्ति वनिताः मां भक्षितुं आगताः मत्वा एवं प्रपलाप्यतां मृतिभयात् त्वं तत्र मास्याः क्षणम् ॥२२॥

## संस्कृत टीका

[वेताला कृतिं] प्रेताकारं [अर्द्धे दग्ध मृतकं] अर्द्धे भस्मीभूतेन शवेन तुल्यं [दृष्ट्वा] वीक्ष्य [भवन्तं] त्वां [यते] मुने [यासां] स्त्रीणां [नास्ति] न विद्यते [भयं] भीतिः [त्वयासमं] भवतासार्धं [अहो] आश्चर्ये [जल्पन्ति] वचनालापं कुर्वन्ति [ताः] स्त्रियः [तद्] वचनं [पुनः] द्वितीय वारे [राक्षस्यः] हिंसकाः [भुवने] लोके [भवन्ति] सन्ति [वनिता] नार्य्यः [मां] स्वं [आगताः] आयाताः [भक्षितुं] खादितुं [मत्वा] निश्चयीकृत्य [एवं] इत्थं [प्रपलाय्यतां] धाव [मृतिभयात्] मृत्योः भीतेः त्वं भवान् तत्र तस्मिन् स्थाने यत्र स्त्रियो भवन्ति वासितेषु मास्था मातिष्ठ क्षण समयं, अल्पकालं ॥ २२ ॥

अन्वयः

भोयते वेतालाकृतिं अर्द्धे दग्ध मृतक भवन्तं दृष्ट्वा यासां भयं नास्ति पुनः त्वया समं अहो तद् जल्पन्ति ताः वनिताः भुवने राक्षस्यो भवन्ति मां भक्षितुं मागता एवं मत्वा मृतिभयात् प्रलाय्यतां त्वं तत्र क्षणं मास्थाः ॥ २२ ॥

भाषाटीका

भार्यान जिन स्त्रियोंको अंताकार अर्थात् जल स्तु
तक की समान तुम को देखकर भय नहीं लाना औ
र फिर तेरा साथ वचना आप करनी है ते नारकोको
क में राक्षसी है से भक्षण करने को आई है रा
से मानकर तू मरण के भय से भाग तनी क्षण-
मात्र भी मत ठहर ॥ २२॥

भाषाछन्द

भो मुनि अद्ध जले शव तुल्य निहार तु
के अरु भूत समाना । भीतिनहीं जिन
के घट में पुन बोलत तो संग शंकत आ-
ना । राक्षसी है वनिता मम भक्षण को उ-
तरी यह जान सुजाना । भाग हिये धर
मृत्यु तनो भय तिष्टन क्यों क्षण एक प्र-
माना ॥ २२॥

मूलम

मागास्त्वं युवती गृहेषु सततं वि
श्वासतां संशयो । विश्वासे जन
वाच्यता भवति न नश्यंत पुमर्थे
ह्यतः । स्वाध्यायानुरतो गुरूक्त-
वचनं शीर्षे समारोपय । लिप्त

त्वं विकृतिं पुनर्व्रजसि चेद्यासि
त्वमेव क्षयम् ॥ २३ ॥

पदच्छेदः

मागाः त्वं युवती गृहेषु सततं विश्वासता संशयः विश्वासे जनवाच्यता भवति ते नश्येत् पुमर्थं हि अतः स्वाध्यायानुरतः गुरूक्तवचनं शीर्षे समारोपयन् तिष्ठ त्वं विकृतिं पुनर् व्रजसि चेत् यासि त्वं एव क्षयम् ॥२३॥

संस्कृतटीका

[मागाः] मागच्छ [युवती गृहेषु] स्त्रीणां निवासेषु [सततं] निरन्तरं [विश्वासता] श्रद्धां, मत्ययं [संशयः] सन्देहः [विश्वासे] श्रद्धायां [जन वाच्यता] लोकानांकथनी [भवति] स्यात् [ते] तव [नश्येत्] क्षयेत्, नाशं प्राप्नुयात् [पुमर्थं] पुरुषार्थं [हि] निश्चयेन [अतः] अस्मात् हेतोः [स्वाध्यायानुरतः] शास्त्राभ्यासेऽनुरक्तः [गुरूक्त वचनं] गुरुभिः कथितं वाक्यं [शीर्षे] मस्तके [समारोपयन्] धारयन् [तिष्ठ] स्थिरीभव [त्वं] भवान् [विकृतिं] विपरीतं [पुनर्] पक्षान्तरे [व्रजसि] गच्छसि [चेत्] यदि [यासि] प्राप्नोषि [त्वमे

व) भवानेव (क्षयं) नाशी ॥२३॥

उन्वय:

त्वं सततं युवती गृहेषु विश्वासनो मागाः विश्वा से ते जन वाच्यता संशयश्च भवति पुमर्थं हि नश्येत् अतः त्वं स्वाध्याया नुरता गुरूक्त वचनं शीर्षे समारोपयं स्तिष्ट चेन पुनर्विकृतिं भ्रजेत् त्वमेव क्षयं यासि ॥२३॥

भाषा टीका

हे मुनि तू निरन्तर स्त्रियोंके घरसे विश्वास मत कर विश्वास में तेरी ओड़से सन्देह और लोक कहावत होगी और पुरुषार्थ नष्ट होगा। इसलिये स्वाध्याय में लीन हुवा गुरों के कहे हुवे वचनों को मस्तक पर धार कर तिष्ट और जो उलटा चलेगा तो तेरी ही हानि होगी ॥२३॥

भाषा छन्द

नारिन के घरका विशवास कदापि न चित्त में रञ्चहु लावे। ताहि किये नव ओड़सु संशय हो पुरुषारथ सर्व नशावे। हो रत पञ्च स्व पाठन में गुरु भाषित वैन तु सीस चढ़ावे। जो इसके विप-

रीत चलै मुनि तौ निज नाश करै दुख पावै ॥२३॥

## मूलम्

किं संस्कारशतेन विट्जगति भोः काश्मीरजं जायते । किन्देहः शुचितां ब्रजेदनुदिनं प्रक्षालनादम्भसा । संस्कारो नखदन्तवक्त्रवपुषां साधो त्वया युज्यते । ना कामी किल मण्डनप्रिय इति त्वं सार्थकं मा कृथाः ॥२४॥

## पदच्छेदः

किम् संस्कारशतेन विट् जगति भोः काश्मीरजं जायते किम् देहः शुचितां ब्रजेत् अनुदिनं प्रक्षालनात् अम्भसा संस्कारः नखदन्तवक्त्रवपुषां साधो त्वया युज्यते न अकामी किल मण्डन प्रियः इति त्वं सार्थकं माकृथाः ॥ २४॥

## संस्कृतटीका

[किम्] वितर्के [संस्कारशतेन] शृङ्गारस्य शतकेन, जल धवनादि क्रियया [विट् ]

पुरीषं [काश्मीरजं] कुंकुमं [जायते] उत्पद्यते [देहः] शरीरं [शुचितां] पवित्रतां [केन] प्राप्नुयात्, गच्छेत् [अनुदिनं] प्रतिदिनं [प्रक्षालनात्] धावनात्, स्नानात् [अम्भसा] जलेन [संस्कारः] शृङ्गारः [नख दन्त वक्त्र वपुषां] करज रदन मुख शरीराणां [साधो] यत्न [त्वया] भवता [युज्यते] क्रियते [नाकामी] न अकामी, कामीतिभावः; विषयासक्तः [किन्तु] निश्चयेन [मण्डनप्रियः] मण्डनंभूषणं प्रियं यस्यसः शृङ्गाराभिलाषी [इति] एवं [सार्थकं] अर्थयुक्तं [मास्कथाः] माकुरु आत्मानमिति शेषः ॥ २४ ॥

## अन्वयः

भो साधो किं संस्कार शतेन जगति विद काश्मीरजं जायते किन्देहोऽनुदिनं अम्भसा प्रक्षालनात् शुचितां व्रजेत नख दन्त वक्त्र वपुषां संस्कारः त्वया युज्यते त्वंमण्डन प्रियः अकामीन किन्तु इति सार्थकं मास्कथाः ॥ २४ ॥

## भाषाटीका

भो मुनि क्या सौ संस्कार से भी जगत में वि-
ष्टा केसर होजाता है क्या शरीर प्रति दिन
के स्नान से शुद्ध होजाता है। नख दांत मु
ख शरीर का श्रृंगार जो तू करता है तो तू मंडन
प्रिय है अकामी नहीं है यह सार्थक नाम
मत रक्खो ॥ २४

भाषा छन्द

क्या जग में विट संस्कृति सौ कर चन्दन
केसर वा बन जावे। त्यों यह देह न न्हा
न किये प्रति वासर के शुचिता टुक पा
वे। संस्कृति दन्तन की नख की मुख
की वपु की यह बात जनावे। है न अ-
कामि तु मण्डन प्रीतम ना यह सार्थक
नाम धरावे ॥ २४ ॥

मूलम्

वृत्तैर्विंशतिभिश्चतुर्भिरधिकैः
सल्लक्षणैर्नान्वितै। र्ग्रंथसज्ज
नचित्त बल्लभमिमं श्रीमल्लिष
णोदितं। श्रुत्वात्मेन्द्रियकुञ्ज
रान् समटतो रुन्धन्तु ते दुर्जरान्

न्विक्षांसि विषयाटवीषु सततं संसा
रविच्छित्तये ॥ २५॥

पदच्छेदः

वृत्तैः विंशतिभिः चतुर्भिः अधिकैः सल्लक्षणे
न अन्वितैः ग्रन्थं सज्जनचित्त वल्लभं इमं श्री
मल्लिषेण उदितं श्रुत्वा आत्मेन्द्रिय कुञ्जरान
समदतैः रुन्धन्तु ते दुर्जरान् विद्वांसः विषय
टवीषु सततं संसार विच्छित्तये ॥ २५ ॥

संस्कृतटीका

[वृत्तैः] छन्दोभिः [ विंशतिभिश्चतुर्भिरधिकैः
चतुर्विंशतिभिः [ सल्लक्षणेन ] श्रेष्ठ कथने
न कर्त्तव्या कर्त्तव्य व्यवहारेण [ अन्वितैः ]
युक्तैः [ ग्रन्थं ] शासनं [ सज्जन चित्तवल्लभं
सज्जनानां सत्पुरुषाणां चित्तस्य मनसो वल्ल
भं प्रियं वा सज्जन चित्तवल्लभ नाम ग्रन्थं
[ इमं ] पूर्वोक्तं ग्रन्थं [ श्रीमल्लिषेणेन ] शब्द
रूप लक्ष्म्याः नायेन मल्लिषेणाभिधेय आ
चार्येण [ उदितं ] प्रकाशितं [ श्रुत्वा
निशम्य [ आत्मेन्द्रियकुञ्जरान ] स्वस्य

करण हस्तिनः [ समटतः ] विचरतः [ रुन्ध-न्तु ] वशीकुर्वन्तु [ दुर्जरान् ] दुःखेन कष्टेन ज-रा जीर्णता येषां तान्, कष्टसाध्यान् [ विद्वां सः ] पण्डिताः [ विषयाटवीषु ] स्पर्श रस गंध वर्ण शब्दाः विषयाः ते एव अटव्यः वनानि तेषु [ सततं ] निरन्तरं [ संसारविच्छि त्तये ] जगतो नाशाय ॥ २५ ॥

## अन्वयः

ये इति शेषः विद्वांसः ते इमं ग्रन्थं श्रु त्वा आत्मेन्द्रिय कुञ्जरान् रुंधन्तु कथ म्भूतं ग्रन्थं श्रीमल्लिषेणोदितं कैः चतु भिरधिकै विंशति भिर्वृत्तैः कथम्भूतैः स-ल्लक्षणान्वितैः कथम्भूतं ग्रन्थं सज्जन चि त्त वल्लभं कथम्भूतान् आत्मेन्द्रिय कुञ्ज-रान् विषयाटवीषु सततं समटतः पुन र्दु-र्जरान् ॥ २५ ॥

## भाषा टीका

विद्वान् पुरुष चौबीस श्लोक में श्रीमल्लि षेणाचार्य्य के बनाए हुवे इस श्रेष्ट ल-क्षण युक्त ग्रन्थ को सुनकर अपनी इ-

न्द्रिय रूप हाथियों को जो विषय रूप अट वी में चारों ओड़ फिरते हैं और दुर्जय है से सार के नाश के हेत रोको ॥ २४ ॥

भाषा छन्द

बीसरु चार श्लोकन में यह उत्तम लक्षण युक्त नवीना । सज्जन चित्त प्रियः चर काव्य रच्यो मल्लिषेण बड़ा जिन कीना । आतम इन्द्रिय दुर्जय कुंजर जे विषयाटवि में नित लीना । या सुनके वशि आन तिन्हें जग विख्यात हेत सुधी गुण पीना ॥२४॥

## टीकाकार कवि कुल देश वर्णनं

### छन्द छप्पय

भारत वर्ष मझार देश पञ्जाव सुविख्यात । ता मध दिल्ली जिला सकल जनको आनंद देन । ताके उत्तर मध्य नगर सुनपत सब सज्जन ।

ना मध चार जिनेश भवन भवि जन मन रञ्जन । तिस नगर माँहि मम बास है । मिहरचन्द मम नामवर । हूँ पण्डित मथुरादास - का । लघु भ्राता लघु ज्ञान धर ॥ ॥

## चौपाई

तीन अल्प बुद्धि अनुसार॥
संस्कृत भाषाछन्द मंझार॥
बाल बोधनी टीका सार ॥
स्त्री न पण्डित जन हितकार
न्यून शतक दो सहस्रमंझार
क्षेपो अधिकसमदशचार
शुक्ल त्रियोदशिकार्तिक मास
चन्द्रबार दिन कियो प्रकाश

## दोहा

है पण्डितजन प्रति यही एक प्रार्थना मूल ॥
देख दोषशुधकीजिये, अवगुण गहैं न भूल॥



इति